वाणीं भजत

# गैर्वाणी

मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः ३ | 15 NOVEMBER 1965 | क्रमाङ्कः ११

कार्तिकाङ्कः ] शकवर्षः १८८७ [ मूल्यम् ४० पैसाः

# विषयसूचिका



अवधेयम् — मातृसान्त्वने माते (मा + ते) इति विभिन्नपद-मेकं वाक्यम् ते भीतिर्मास्तु इत्यर्थकं तत् आदरातिशयात् पुनः पुन-रावर्त्यते इति अवगन्तव्यम् ।

*

# मातृसान्त्वनम्

माते ! मा ते भीतिर्भवतात्<br>
माते ! मा तव धृतिर्विगलतात् ।<br>
घातुकजनहेतिस्फुरणात्<br>
वीतनयरिपूत्थितिकारणात् ॥ ॥ माते ॥

माते ते पुत्रा जागरिताः<br>
माते ते मित्राणि च सुदृढानि ।<br>
माते तेऽवगता अप्यरयः<br>
ज्ञाते तत्वे न हि प्रमादः ॥ ॥ माते ॥

आंग्लामेरिकावञ्चनमधिगतम्<br>
चैनाप्रेरणकारणं अवहितम् ।<br>
त्रिविष्टपसीमाभूमिषु सुनिभृतं<br>
अनिष्टं शत्रूणामप्यवगतम् ॥ ॥ माते ॥

स्फोटविस्फोटप्रस्फोटास्सज्जिताः<br>
स्थलजलाकाशयानानि सद्धानि ।<br>
टांकाः टंका इव पाटयिष्यन्ति पटानान्<br>
धक्ष्यन्ति चास्मद्योधखगा रिपुव्यूहान् ॥ ॥ माते ॥

माते मा ते परमुखवीक्षणं
जाते विवेके प्राज्ञेषु ते सुतेषु।
निर्मीयमाणेषु सर्वेषु साधनेषु
निरूपिते च तदमोघत्वे प्रपञ्चे ॥ ॥ माते ॥

कृषीवलाः कृषिसंसक्ताः
कार्मिकाः कर्मसु अनुरक्ताः ।
युवानः विधृतभिन्दिवाला
आकलयन्ति अनुक्षणं शत्रुचारम् ॥ ॥ माते ॥

राशीभवन्ति बांबा भूधरवत्
कूटीभवन्ति टांका कोटिशोऽनिशम् ।
उद्गच्छन्ति वैहासयानानि अनुक्षणम्
उद्वमन्ति फिरङ्गा बडवाग्निम् ॥ ॥ माते ॥

नीतिरस्मदीया विशुद्धा
भूतिरस्मदीया प्रसिद्धा ।
ख्यातिरस्मदीया विशिष्टा
रीतिरस्मदीया प्रशस्ता ॥ ॥ माते ॥

धृतिरस्मदीया वरिष्ठा
कृतिरस्मदीया द्रढिष्ठा ।
क्षान्तिरस्मदीयाऽनुकार्या
भ्रान्तिर्वैदेशिकैः परिहार्या ॥ ॥ माते ॥

॥ नमः कौटिल्याय ॥

युद्धविरामो घोषितः केवलम् न तु पाकेन आचरितः। प्रतिपदं प्रतिपदं च विरामरेखायाः उल्लंघनं तस्य स्वाभाविकमभवत्। अस्मदीयसैनिकानां च तदुपद्रवकारणात् अनवरतसन्नद्धता अविश्रान्तिश्च आपतिते। न कोऽपि भद्रता-समितेरधिकारी पाकं निराकुरुते अविनयात्। अस्मदीया विज्ञापनाश्च अरण्य-रोदनानि बधिरशंखारवाश्च भवन्ति। कदाचित् पाकप्रोत्साहितेन तदधिकारिणा अविचारितमेव भारतीयसेनादोषः एव प्रकाश्यते इत्येतद्रीत्या सा समितिः पयोमुखविषकुम्भानां प्रबलानां कतीनांचन राज्यानां प्रोत्साहपरवशा चेष्टते तदनुगुणमिति प्रतिभाति।

तदप्रमत्तैः अस्माभिः स्वसम्पादितप्रदेशानां संरक्षणे क्षण आधेयः। युद्ध-विरामसीमायाः अभिज्ञानात् प्रागेव प्रच्युतस्य प्रदेशस्य स्वाधीनताप्रकाशनाय यतते शत्रुः। विजितः प्रदेशः विजेतुरेव वशे भवेद्वा इति तस्य मनसि संशयो वर्तते। स च काश्मीरविषये तथा वांछति, लाहोरप्रान्तविषये तु तदन्यथा च। तस्मात्स यावच्छक्ति भ्रष्टं पाकिस्थानं पुनस्संपादयितुं यतते। तदवहितैः अवलेप-विरहितैश्च अस्माभिः विजितः प्रदेशस्संरक्षणीयः।

अपि च खरादयः रमं प्रति यथा तथा पाकाः चतुर्दशसहस्राणां योधानां वारं काश्मीरकबलनाय प्रेषयन्तीति परिज्ञायते। तत्रात्यन्तमवधानमावश्यकम्। इतःपूर्वमेव पौरवेषधारिभिः लुण्ठाकैः मायाविभिः पाकप्रेरितैः कलुषितस्स प्रदेशः अन्तरुपद्रवदन्तुरितः वर्तते। ते च घातुकाः पौरान् विद्यार्थिनश्च दुर्विनीय विपद आपादयन्ति। अनुदधृतेष्वेव तादृशकण्टकेषु एते च यदि प्रवेक्ष्यन्ति तर्हि महदाकुलं स्यात्। तदवधानेन अनुसंधानेन च पर्यालोच्य एतदुपद्रव-निर्मूलनोपाया आस्थेयाः। यावच्छक्यं यावच्छीघ्रं च काश्मीरेषु प्रतिग्रामं

जनसंख्यानं सम्पादनीयम्। नूतनजनप्रवेशः निरोद्धव्यः पुरातनजननिष्क्रमश्च। अथवा तदुभयमपि आधिकारिकतया अनुमोदनीयम्। प्रतिसप्ताहं च जनानामुपस्थितिः ज्ञातव्या। एतदादिक्रियानिर्वर्तनाय च पाकिस्थानबाधिता विश्वास्याः कान्दिशीका योजयितव्याः। यदि शक्यते विजितः सन्दिग्धश्च प्रदेशः कान्दिशीकनिकरेण सम्पूरणीयः। यो यद्भाषया व्याहरति स तद्भाषयैव समाधातव्यः। आर्जवं हि कुटिलेषु न नीतिः।

अपरञ्च तटस्थराज्यानि न तटस्थानि, अपि तु स्वार्थसाधनपरतया गोचर्मच्छन्ना व्याघ्रा इत्यपि एतत्सन्दर्भे सुविदितमासीत। तत्र च आंग्लराज्यस्य भूमिका अस्मद्भ्रामिका केवलमिति सुस्पष्टमासीत्। न जानीमो वयं भारतेनं किमपराद्धं आंग्लाय? स्वातन्त्र्यप्रार्थनमेवास्मदपचारः। यद्यपि पाकिस्थानीया अपि तादृशापकारिण एव, तथापि तेषु वात्सल्यस्य कारणं त एव जानन्ति। असूयायाः चरमसीमेयं। तत्संघटितसंस्थानवागुरामोचनात्स्वेच्छामनुभवति भारते अंन्तिमो लगुडप्रहारोयं तस्य। समष्टिभाग्यसदस्ये भारते नैतादृशी रीतिर्युक्ता आंग्लस्य। तत् भारतं अपमार्गे गमयति, आवर्जयति, पश्चादाकर्षति समये, शल्यसारथ्यमाचरति। त्रिसमुद्रमुद्रितस्य भारतस्य रक्षणार्थं जलान्तर्गामिप्रदानं प्रतिज्ञाय तत् न निरवर्तयत्। तेषां कृते रण्यायाः प्रार्थने व्यर्थं कुप्यति। पाकाय प्रकाशं गूढं च आयुधादिसाहाय्यमर्पयति, तं तर्पयति। आपदि समुत्पन्नायां भारतस्य वाङ्मात्रेणापि सान्त्वनं नारचयत्। प्रत्युत कुटिलवचनैः भारतमेव निन्दति।

अमेरिकायाः परिस्थितिरितोप्यधिकप्रमादकारिणी वर्तते। शान्तिसमये एव आत्मनः आयुधोत्तमानां प्रेषणेन पाकयोधानां आयुधशिक्षणेन च तं देशं प्रबलमकरोत्। भारतप्रश्नस्योत्तरतया अस्मदायुधानि भारतस्योपरि अप्रयोजज्यान्येव प्रतिज्ञातानीति भारतमन्वरञ्जयत्। प्रयुक्तेषु च भारतशिरसि सकलेषु च तेषु आयुधेषु वाङ्मात्रेणापि न न्यवारयत। लीलया अनुमोदितं चैतत्। नह्यमेरिकायाः भावः अवगम्यते समाजवादिसंहितस्य पाकस्य हितसंपादनेन किं साधयितुं चिंतितमिति। एतदेवस्यात — पाकानुकूलतया स्थित्वा तत्साह्यव्याजेन काश्मीरमधिष्ठाय चैनाप्रतिरोधः निर्वर्तयितव्य इति। रात्रिर्गमिष्यति भविष्यति सुप्रभातम् भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः, इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार" इति रीत्या किं वा भविष्यति को वा जानीते। अस्माभिः विदेश-

वस्तूनां अवतरणं स्थगयितव्यम्, विलासवस्तूनां च अवतरणनिरोधः सुदृढं प्रवर्तयितव्यः। एवंरीत्या वैदेशिकद्रव्यसम्पत्तिः युद्धोपयोगिवस्तुसम्पादने परिमिता भवेत्। आहारवस्तूनां कीटाक्रान्तगोधूमानां तण्डुलानां क्षीरचूर्णस्य औषधानामनावश्यकानां वि. सि. जि. सूचिकाप्रभृतीनां च कृते द्रव्यव्ययो न कार्यः। यदि शक्येत अस्मद्देशे एव तानि उत्पादयितव्यानि। एवं कृते गांधिना खद्दरविषये निर्धारिताः लाभाः देशीयानामेव भविष्यन्ति।

अपरं च आपत्काले अस्मिन् विलासानां का प्रसक्तिः। गृहे प्रदीप्ते तज्ज्वालायां धूमवर्तिसंधुक्षणमिव अधुना विलासानुभवो विद्यते। तन्निवारणाय विलासवस्तुषु विलासलीलासु च करो महान् आदेष्टव्यः। तेन तदनादरः प्रजासु प्रवृद्धो भवेत्, तेन स्वत एव तादृशवस्तूनां अवतरणं स्थगितं भवेत्। अन्यथा प्रभुत्वकोशस्संपूरितो भवेत्।

न हि प्रतिभावतां पालकानां परोक्षं नाम। तथापि देशभक्तिर्मुखरयति एवं गैर्वाणीम्॥

॥ लोकास्समस्तास्सुखिनो भवन्तु! ॥

मुक्तकम्

सङ्कलयिता — माचिराजु शिवरामराजः

आनन्दताण्डवपुरे द्रविडस्य गेहे
प्राज्यं वसिष्ठवनितासममाज्यपात्रम्।
विद्युल्लतेव परिनृत्यति तत्र दर्वी
धारां विलोकयति कश्चन योगसिद्धः॥

ॐ

# दया

लेखकः - श्री नारायणमूर्तिः,

चैतन्यपाठशाला,

आलगड्डा.

यः दुःखितेषु दयां न करोति न स मनुजः। यः पीडितेषु दयां न दर्शयति न स मनुष्यः। यः प्राणिषु दयां न करोति न स मानवः। दयालुः शिबिः स्वशरीरमेव समर्पयामास। दयालुः दधीचिः स्वास्थीन्येव समर्पयामास। दयापरः रन्तिदेवः स्वाहारमेव समर्पयामास। भगवान् बुद्धः दयामेव प्रबोधयामास। महावीरस्वामी दयामेव प्रबोधयामास। अहिंसाव्रतः परिपालनीयः। कठोरवचनं न वक्तव्यम्। दुःखं न देयम्। परपीडा न कर्तव्या। प्राणिषु दया कर्तव्या। दया क्रौर्यं दूरीकरोति। दया नैष्ठुर्यं दूरीकरोति। दया कार्पण्यं दूरीकरोति। दया अहिंसां प्रेरयति। दया परोपकारं प्रेरयति। दया सेवां प्रेरयति। दया त्यागं प्रेरयति। दया सद्गुणानां जननी भवति। दीनेषु दुःखितेषु दया कर्तव्या। निर्धनेषु अनाथेषु दया कर्तव्या। दुर्बलेषु असहायेषु दया कर्तव्या। रोगिषु असमर्थेषु दया कर्तव्या। पीडितेषु दया कर्तव्या। सर्वप्राणिषु दया कर्तव्या। दयाव्रतः परिपालनीयः। सर्वोऽपि दीनदयालुः स्यात्॥

*

# राष्ट्रध्वजः

लेखकः – वैद्य रामस्वरूपशास्त्री
बालसंस्कृतसम्पादकः. मुम्बापुरी.

कः अयम् ?
अयमस्माकं राष्ट्रध्वजः ।
कति वर्णाः सन्ति ध्वजेऽस्माकम् ?
ध्वजेऽस्माकं त्रयो वर्णाः सन्ति ।
केऽत्र त्रयो वर्णाः सन्ति ?
शुक्लः पीतः हरितश्चात्र त्रयो वर्णाः सन्ति ।
ननु किमभिज्ञायते वर्णैस्तैः ?
तैः क्रमेण देशस्य शौर्यौदार्यसमृद्धश्चाभिज्ञायन्ते ।
ननु मध्येध्वजं चक्रेण किं ज्ञायते ?
तद् विष्णोः भगवतः श्रीकृष्णस्य चक्रम् ।
ननु चक्रस्य चिह्नेन किमभिज्ञातम् ? चक्रं देशस्य शत्रून् छिनत्ति इति ।
कथम् भोः अहिंसके राज्ये नः शत्रूणां हननम् ?
स्वसंरक्षणमेव हननं शत्रूणाम् ।
ननु क क दृष्टः त्वया राष्ट्रध्वजः ?
अयं राजकीयभवनेषु धनिकानां हर्म्येषु विद्यालयानां शिरःसु मया दृष्टः ।
कदा जनाः राष्ट्रध्वजस्य पूजां कुर्वन्ति ?
उत्सवेषु जनाः राष्ट्रध्वजस्य पूजां कुर्वन्ति ।
ननु कस्मै हेतवे पूजनीयमिदं चिह्नम् ?
राष्ट्रस्य किरीटमिति अवश्यं पूजनीयमिदम् ।

एष राष्ट्रध्वजोऽस्माकं स्फुरत्यल्पेन वायुना ।
चित्ते शौर्यं च धैर्यं च स्फोरयन् उन्नतिं पराम् ॥

# श्रीहयग्रीवलहरी

रचयित्रः– न० शठकोपः

हयास्य ! स्यन्दन्ते वदनकमलाद्वाङ्मधुझरी-
परीवाहास्तस्य स्फुरति हृदि यस्यानेशमपि ।
त्वदीयं रूपं निर्जितदिनमणि, प्रेमभरितम्
लसल्लक्ष्मि, श्वेताम्बुजसमुपविष्टं श्रुतिनुतम् ॥ ॥ १ ॥

यमाख्यातुं वेदा अपि विरतवादाः क्व च पुन-
र्मितप्रज्ञा मादृङ्मनुजततिरीष्टे कलयितुम् ।
तथाप्यश्वास्य ! त्वा मुरगत इह स्तोतुमह मि-
त्यतस्ते वात्सल्यं प्रकटितमभून्मादृशजने ॥ ॥ २ ॥

त्वदीयो दृग्लेशो यदि पतति मूकेऽपि स भवेत्
सुधाधाराकल्पैर्वचनरचनैर्गीष्पतिसमः ।
हयग्रीवैवं चेदथ पुनरसौ किं नु भवता
य ईषद्वागाख्येन्द्रियविरचितव्याहृतिलवः ? ॥ ॥ ३ ॥

उपास्य त्वां केचिद्विमलमनसश्चारुकृतिभिः
स्तुवन्ति स्माश्वास्य ! प्रथितयशसः पूतचरिताः ।
मदुक्ती रिक्तापि प्रभवतु भवन्तं रमयितुं
मधुस्वादाध्मातोदरमिव नरं क्षारकरसः ॥ ॥ ४ ॥

सुरज्येष्ठो भ्रष्टः किल परदयायास्तव ऋतेऽ-
भविष्यन्नादास्यः श्रुतिमसुरनीतां यदि पुनः ।
कनिष्ठानां वार्ता हयवदन ! जागर्ति ननु का ?
कृपापारावार ! प्रदिशरधियमाध्यात्मिकरसाम् ॥ ॥ ५ ॥

[क्रमशः]

श्रीमते रामानुजाय नमः

श्रीमद्वरवरमुनये नमः

# अष्टोत्तरशतदिव्यदेशस्तुतिः

श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामिकृतिः

---

शठवैरिकलिवैरिमुखसूरिविनुतान्
प्रथमानविभवांश्च सशताष्टनिलयान् ।
भुवि दिक्षु सकलासु लसतोऽत्र महितान्
स्तुतिपद्यनिचयेन कलयामि हृदये ॥ ॥ १ ॥

(टिप्पणी) श्रीपराङ्कुशपरकालादिदिव्यसूरिमङ्गलाशासनपात्रभूतान् प्रथितप्रभावान् चतसृष्वपि दिक्षु विराजमानान् अष्टोत्तरशतसंख्यान् दिव्यदेशानधिकृत्य स्तुतिपद्यमालां विरचय्य धन्यो बुभूषामि ॥

चतुर्दशेति प्रथितेषु काञ्ची-
ललामभूतेषु शुभस्थलेषु ।
विराजमानान् करिशैलनाथ-
देवाधिराजप्रमुखान् स्तवानि ॥ ॥ २ ॥

सर्वेष्वपि दिव्यदेशेषु श्रीरङ्गस्यैव प्राधान्यसत्त्वेऽपि कवेः काञ्चीपुराभिजनत्वात् दिव्यसूरिषु प्राथमिकस्य सरोमुनेः काञ्चीक्षेत्रावतीर्णत्वाच्च काञ्चीदिव्यदेशाः प्रथमं स्तूयन्ते । काञ्चीपुर्यां चतुर्दशदिव्यदेशाः प्रसिद्धाः, श्रीहस्तिशैलशिखरोज्ज्वलपारिजातः श्रीदेवाधिराजो भगवानिह प्राधान्यमश्नुते; एतदादयोऽर्चामूर्तयः स्तूयन्ते इति प्रतिज्ञा ॥

१. श्रीहस्त्यद्रिनाथभगवतस्स्तुतिः

श्रीभूतयोगिशठजित्परकालसूरि-
मुख्यैर्महामुनिवरैरुपगीतभूमन् ।
ब्रह्माध्वरोदित! नतार्तिहृतिप्रवीण!
हस्त्यद्रिनाथ भगवन्! शरणं ममासि ॥ ॥ ३ ॥

हस्तिशैलनिलयो वरदो भगवान् प्रणतार्तिहरनाम्नाऽपि प्रसिद्धः । चतुर्मुख-ब्रह्मानुष्ठितहयमेधाध्वरादुदित इति पौराणिकी प्रथा । श्रीभूतयोगिश्रीपरांकुश-परकालादिभिरुपगीतभूमा सोऽयमस्माकं शरण्यः ॥

२. श्रीयथोक्तकारिभगवत्स्तुतिः

श्रीमत्सरोमुनिमुखैः प्रथमैर्मुनीन्द्रैः
श्रीभक्तिसारशठजित्कलिजित्कवीन्द्रैः ।
उद्गीतवैभव! यथोक्तकृदीश! वेगा-
सेतो! मुकुन्द! विजयीभव भक्तवश्य ॥ । ।४॥

चतुराननकलिताध्वरपरिपालनकारिन्!
सरसीमुनिजननस्थलशुभवीक्षणदायिन्!
क्षितिसारजमुनिपुंगवकणिकृष्णमहात्म-
प्रतिबोधितपरमाद्भुतगुण! नाथ! दयस्व ॥ ॥ ५ ॥

श्रीयथोक्तकारी भगवान् श्लोकद्वयेन स्तूयते विलक्षणप्रभावातिशयशालित्वेन हेतुना । श्रीसरोमुनिमहदाह्वयमुनिभक्तिसारमुनिश्रीपरांकुशपरकालमुनीन्द्रैरभिष्टुतः । चतुर्मुखकृताध्वरप्रत्यूहसंपादनार्थं प्रवृत्तायां वेगवत्यां सेतुत्वेन शयितत्वात् वेगासेतुनाम्ना च प्रथितः । स्वसन्निहिते सरोवरे कृताविर्भावस्य प्राथमिकदिव्यसूरे-रवतारस्थलं सदा कटाक्षयन्नास्ते । क्षितिसारजः - महीसार (तिरुमलिशै) क्षेत्रावतीर्णो भक्तिसारमुनिः । कणिकृष्णः — तदन्तेवासी । एताभ्यामुभाभ्यां भगवतोऽस्य भक्तपराधीनत्वरूपो महागुणः प्रचुरीकृत इति कथा प्रसिद्धा । स एष भगवान् कृपां कर्तुमभ्यर्थ्यते ॥

३. अष्टभुजभगवत्स्तुतिः

संस्तूयमान! महदाह्वयदिव्यसूरि-
श्रीमत्कलिद्विडभिधानकवीश्वराभ्याम् ।
स्वामिन्! दयाजलनिधेऽष्टभुजास्पदेश!
क्षिप्रं कटाक्षय भवार्णवपातिनं माम् ॥ ॥ ६ ॥

महदाह्वयेन तृतीयसूरिणा श्रीपरकालसूरिणा च स्तुतोऽसावष्टभुजो भगवान् । सर्वत्र स्थलविशेषकीर्तनस्य प्रधानत्वात् अष्टभुजास्पदेश! इति स्थलनामपुरस्सर-निर्देशः । श्रीमान् वेङ्कटनाथार्योऽप्येवमाह ॥

४. कामासिकाक्षेत्रनाथभगवत्स्तुतिः

श्रीमन्महत्तरमुनीन्द्र - कलिद्विडाख्य-
सूरीन्द्रगीत! दितिजान्वयमूलघातिन् ।
प्रह्लादभक्तिभरगोचरदिव्यमूर्ते!
कामासिकानरहरे! मयि धेहि भद्रम् ॥ ॥ ७ ॥

"वेळुकै" इति भाषानाम्ना प्रसिद्धं कामासिकाक्षेत्रं नरसिंहभगवदध्युषितम् । अष्टभुजक्षेत्रस्तुतिकर्तारौ द्वावेव सूरी अत्रापि स्तोतारौ ॥

५. दीपप्रकाशभगवत्स्तुतिः

श्रीमत्कलिप्रमथनाह्वयसूरिगीत!
वेदान्तसूरिजननस्थलमीक्षमाण! ।
दीपप्रकाश ननु शीतवनस्थलेश!
संसारसिन्धुपतितं परिरक्षतान्माम् ॥ ॥ ८ ॥

श्रीदीपप्रकाशभगवदाख्यो भाषायाम् "तणूका" इति प्रसिद्धः । तस्यैव शीतवनस्थलमिति संस्कृतनाम । अत्रैव परिसरे भगवतो वेदान्ताचार्यस्यावतारः ॥

६. उरगक्षेत्रस्थत्रिविक्रमभगवत्स्तुतिः

महोरगस्थलेश्वर ! प्रसिद्धवैभव प्रभो
महामुनीन्द्रभक्तिसारनीलयोगिसंस्तुत ! ।
खरूपमेघरूपनीररूपदेवसंवृत
त्रिविक्रमप्रभो मुदा कटाक्षयस्व मां सदा ॥ ॥ ९ ॥

त्रिविक्रमो भगवानिह महोरगरूपेणापि दर्शनं दिशतीति हेतुना मन्दिरमदसीयं महोरगक्षेत्रमिति प्रथते । ऊरगमिति भाषानाम । क्षेत्रमिदं दिव्यसूरिभिस्त्रिभिस्स्तुतम् । नीलयोगीति परकालसूरेर्नामधेयं श्रीरामानुजनूत्तन्दादिदिव्यप्रबन्धप्रथितम् । उपरि स्तोष्यमाणास्त्रयो देवाः गगनरूपि - मेघरूपि - नीररूपिसमाख्या अस्मिन्नेव मन्दिरे कृतावसथा इति तृतीयपादेनोच्यते ॥

७. गगनरूपिभगवत्स्तुतिः ( कार्वानम् )

उरगावसथे कलितास्पद भो
गगनाकृतिदेव महामहिमन् ।
परकालकवीडित ! भक्तजन-
प्रियदानरत ! प्रणतं कुरु माम् ॥ ॥ १० ॥

उरगावसथसमाख्या त्रिविक्रमभगवदालयस्येति स्मर्तव्यम् । कार्वानाचुळ्ळानिति भगवतोऽस्य भाषानाम । प्रणतं मां कुरु – मदीयमवलेपमपाकुरु इति भावः ॥

८. मेघरूपि भगवत्स्तुतिः

परकालमुनीन्द्रेण स्तुताय घनरूपिणे ।
उरगक्षेत्रवासाय हरये कलये नतिम् ॥ ॥ ११ ॥

भगवतोऽस्य "कारहत्तान्" इति भाषानाम ॥

# सम्पादकं प्रति लेखः

लेखकः – आचार्य विद्याभूषणः, द्विवेदी

प्राध्यापकः, इं कालेजः, बबेरू, बांदा.

धन्येयं भारतवसुन्धरा यत्र च राष्ट्रपतिपदे श्रीमन्तः राधाकृष्णमहोदयाः, प्रधानमन्त्रिपदे श्रीलालबहादुरशास्त्रिणश्च, अन्येपि प्र. सम्पूर्णानन्दप्रभृतयः संस्कृत-विद्वांसः सन्ति संस्कृतोन्नतितत्पराः देशहितैषिणश्च । यद्यपि कतिचन भारतनौका-कर्णधाराः असंस्कृतज्ञास्सन्ति ते अपि संस्कृतोन्नतिं प्रति निष्ठावन्त एवेति महदानन्द स्थानं । विभावयन्तु च भवन्तः येऽत्र भारते अवतीर्णाः महानुभावतां च गतास्ते आत्मनः संस्कृतज्ञानराहित्यं भारतां अभिशापमेवामन्यन्त ।

यथा हि विश्ववन्द्यः गान्धी आत्मकथायां लिखति सप्तविंशतमे पृष्ठके "मुझे तो यह पश्चात्ताप होता है कि मैं अधिक संस्कृत न सीख सका" इति । अनेन ज्ञायते यत् भारतीयानां कृते संस्कृतज्ञानं परमापेक्षितमस्ति । भारतवर्षस्य कोणेषु संस्कृतविश्वविद्यालयाः महाविद्यालयाः वा भवेयुः येन संस्कृतज्ञा बहुला लप्स्यन्ते । अयं हर्षस्य विषयः अद्य विश्वविद्याकेन्द्रे भगवता शङ्करेण विराजितायां वाराणस्यां प्रत्येकं संस्कृत विश्वविद्यालयो विलसति । किं बहुना, स समयः सन्निकट एव वर्तते यस्मिन् संस्कृतज्ञा बहुमान्याः भविष्यन्ति संस्कृतं च पूज्या भाषेति सर्वे स्वीकरिष्यन्ति । भगवन्तं प्रार्थये संस्कृतं राष्ट्रभाषापदमध्यारोपयितुम् ॥

# सुलभपाठमाला १६

## क्रियाः

### भूतकालः

बालः पाठं अपठत् । बालाः पाठं अपठन् । बालौ पाठं अपठताम् ।
रामः गुरुं अनमत् जनाः राजानं अनमन् । कृष्णार्जुनौ अनमताम् ।
सूर्यः आकाशे अभ्रमत् । नक्षत्राणि आकाशे अभ्रमन् । नेत्रे अभ्रमताम् ।
भृत्यः घटं अवहत् । भृत्याः भारं अवहन् । वृषभौ शकटं अवहताम् ।
त्वं पाठं अपठः । यूयं अपठत । युवां अपठतम् ।
त्वं अभ्रमः । यूयं अभ्रमत । युवां अभ्रमतम् ।
त्वं अनमः । यूयं अनमत । युवां अनमतम् ।
अहं पाठं अपठम् । वयं अपठाम । आवां अपठाव ।
अहं अभ्रमम् । वयं अभ्रमाम । आवां अभ्रमाव ।
अहं अनमम् । वयं अनमाम । आवां अनमाव ।
अहं अपश्यम् । वयं अपश्याम । आवां अपश्याव ।

### विधिः

| त्वं | यूयं | युवां |
|---|---|---|
| पठ | पठत | पठतं |
| वद | वदत | वदतं |
| गच्छ | गच्छत | गच्छतं |
| तिष्ठ | तिष्ठत | तिष्ठतं |
| भ्रम | भ्रमत | भ्रमतं |
| कुरु | कुरुत | कुरुतं |
| चर | चरत | चरतं |
| नम | नमत | नमतं |
| पश्य | पश्यत | पश्यतं |
| वह | वहत | वहतं |
| नय | नयत | नयतं |
| वस | वसत | वसतं |
| आगच्छ | आगच्छत | आगच्छतं |

# राजाजीकथा १९

## मार्जारस्यापि देशिकः

लेखकः – आ. वरदराजः

अगस्त्यः कदाचित् मार्जारमाहूय तमेवमुपदिदेश। "हे मार्जार! तव जीवितं अत्यन्तं पापभूयिष्ठम्। व्याघ्रस्ते मातुलः। स कानने निवसति; न तस्याऽन्यः कश्चिन्मार्गः; स कन्दमूलान्यशित्वा न शक्नोति जीवधारणं कर्तुम्। बुभुक्षायां सत्यां दृश्यमानं यं कञ्चिन्मृगं हत्वा भक्षयेत्। त्वं पुनः पयो दधि तक्रं नवनीतं घृतं इत्यादि सम्पादयतां मानवानां मध्ये जीवसि। प्राणिवधं कृत्वैव जीवितव्यमिति नास्ति निर्बन्धः। इतःपरं त्वया पक्षिणो मूषिकाश्च नैव हन्तव्याः" इति प्रोवाच।

मार्जारोऽङ्गीचकार। निरचैषीच्च - नैवेतःपरं सा सरणिरनुसरणीया मया जीवितुं, या पुनरद्य यावत् अनुसृता। अहं मज्जातीयाश्च जीवकारुण्येनैव जीविष्यामः" इति।

तत आरभ्य मार्जाराः न मूषिकान् ग्रहीतुं प्रवर्तन्ते, न तान् हत्वा वा भक्षयितुं ईहन्ते। दुग्धं, नवनीतं, दधि, तक्रं इत्यादिकं चोरयित्वा भक्षयन्तः जीवितुं प्रावर्तन्त।

ग्रामे सर्वेऽपि मार्जारेभ्यः अतीव कुप्यन्त आसन्। यत्र क्वापि, यत्किञ्चित् घृतपक्वं वस्तु चेत् दृश्येत, तर्हि मन्यतां परस्मिन्नेव क्षणे तदन्तर्हितं मार्जारेण। क्षीरभाण्डं घृतपात्रं वा यदि मनागलक्षितं, तर्हि नैव वक्तव्यं तत्रत्यं तत्तत्सर्वं स्वैयानिगीर्णं हितं इति। गृहेषु मूषिकानां बाधाऽप्यतिशयिता। भयं भियं विना मूषिकाः तत्र तत्र प्रविश्य अन्नं, सूपं, इत्यादिभोजनपदार्थं सर्वं भक्षयित्वा मूषताण्डवं कुर्वन्त आसन्।

जनाः कृष्णं परमात्मानं प्रार्थयित्वा तदस्तेपुः । "हे कृष्ण ! अयं उपद्रवः अन्ते ग्रामं महाक्षामं नयेत् । जनाः अतीव उपद्रुताः स्युः । अस्मात् संकटात् जनान् रक्षितुं त्वमेव शरणम्" इति प्रार्थयामासुः ।

श्रीकृष्णः मार्जारपरिबृढमाहूय एवमुपदिदेश । "इतःपरं युष्माभिः क्षीरं दधि नवनीतं इत्यादिकं चोरयित्वा न भक्षयितव्यम् । नैतद्युष्माकं न्याय्यम्; जना अतीव उपद्रुता भवेयुः । विरमत अस्मात् दुर्वृत्तात" इति ।

अमुं उपदेशं श्रद्धा-भक्तिभ्यां सान्तं श्रुत्वाऽन्ते मार्जारनायकः प्राह "भो ! भगवन्, एवं किल श्रूयते यत् कदाचित् भवानपि नवनीतचोर आसीदिति" इति सप्रश्रयं शनैः श्रावयामास ।

"केनोक्तं तत्तथा तव ? तत्सर्वं बाल्ये किल चापल्यायच विलासाय च कृतं मया । न तद्युष्माकं प्रमाणं अनुसरणीयं वा । यूयं पूर्ववत् मूषिकान् गृहीत्वा जीवत । स एव युष्माकं स्वधर्मः । न किञ्चित्पापं तत्र न स्यात् । अर्जुनं तावत् पृच्छत । इमं स्वधर्मं कर्मयोगं तस्मै इतः प्रागेवाऽहं उपादिशम्" इत्याह श्रीकृष्णः ।

अहो ! तथा वा ! इति वदन् मार्जारः प्राह "वयं तदुभयमपि आचरिष्यामः । यत् भवता बाल्ये चरितम्, यच्च पश्चात्कुरुक्षेत्रे भवताऽर्जुनायोपदिष्टं स्वधर्म इति । एतदुभयमपि वयं सममेव समाचरिष्यामः; मूषिकानपि ग्रहीष्यामः, भक्षयिष्यामश्च दुग्धं, दधि, नवनीतमित्यादिकं यथेच्छम् । यद्यस्माभिः तन्न कर्तव्यमिति संकल्पः भवतः, तर्हि आज्ञाऽस्तु श्रीमतः सर्वेभ्यो जनेभ्यः दुग्धादिकं तथा सुरक्षितं निक्षेप्तव्यं यथा मार्जारा नाप्नुयुः इति । न पुनरस्माभिस्तच्छक्यते त्यक्तुं लब्धं चेद्यत्किञ्चित् " इति वदन्नेव स मार्जारपरिबृढो धावन् वृक्षं कञ्चिदधिरूढवान् ।

सर्वभूतान्तरात्मा श्रीकृष्णो जहास "तथाऽस्तु, एवं क्रियतां । परन्तु मल-मूत्रादिकं न सर्वत्र विसर्जनीयम् युष्माभिः । यत्र क्वाऽपि रहसि विसृज्य मृत्तिकयाऽऽच्छादयितव्यम् , किं ज्ञातम् ? " इत्याह ।

मृत्तिकेत्येव सत्यं इति मनसा ध्यात्वा "ओ" मित्याह मार्जारः वृक्षाग्रं गत एव । "प्रत्यहं स्नातव्यम्, किं जानासि ? " इत्याह परमात्मा ।

"तथैव क्रियते, परन्तु जले दृष्टमात्र एवाऽस्मान् महती भीतिरावहति, किं क्रियताम् ?" इति पप्रच्छ मार्जारः।

अधस्तादवरुह वृक्षात्, वक्ष्यामि इत्याह कृष्णः। मार्जारश्चक्रे तथा। जिह्वां प्रसारय इत्याह श्रीकृष्णः; मार्जारः जिह्वां प्रसारयामास। स न कृष्णात् बिभ्यति।

कृष्णः मार्जारस्य जिह्वां संस्पृश्य "इयं ते गङ्गा, प्रत्यहं अनयैव स्वदेहं सर्वं आलिह्य मार्जय" इत्याह। "बाढम्" इत्यङ्गीचकार मार्जारः। ततः प्रभृति स निजदेहं जिह्वया प्रत्यहं लेलिहानः परिमार्जयन् शौचमाचरति।

"मार्जनं" इति शब्दः शुद्धिकर्मणि, शौचे वा बाह्याभ्यन्तरे प्रयुज्यते। अत एव बिडालस्य "मार्जाल" इति शब्दोऽन्वर्थः।

मार्जारः निजशिशुमपि जिह्वयाऽलिह्यालिह्य प्रत्यहं स्नापयति। एवं स शिशून् स्वयमालिह्य परिमार्जयितुमपि शिक्षयति। मार्जारोऽतीव शौचनिष्ठः प्राणी, न पुनः कुक्कुरस्तथा। परन्तु स एव श्वा गृहपालितः न किञ्चिदपि हरति, न वाऽवकाशं ददाति अन्यस्मै अपहर्तुं। नूनं पालितः स पालयति स्वामिनो गृहं, विश्वास्यश्च भवति। मार्जारस्तु न तथा, वराकः। चोरयति अयमेव तस्य दोषः।

# विभूतिवर्धनस्य चातुर्यम्

"साहित्यभूषणम्" पडाल ब्रह्मारेड्डिः,
कोंकुदुरु, पूर्वगोदावरी.

सौभाग्यनगरे विभूतिवर्धनः इति कश्चिल्लक्षाधिपतिरासीत्। स धनेन बुद्धया चातीव प्रसिद्धः। सर्वत्र कर्णाकर्णिकया श्रूयते यद् विभूतिवर्धनः प्रत्यहं आवरणस्थकूपनिकटे आत्मनः धनपेटिकां भक्त्या प्रक्षालयति पूजयाति च यतः आत्मनः धनस्य अक्षयत्वं सम्पद्वृद्धिश्च सम्भवेत्। दुर्भिक्षवशाद्वा कलियुग-स्वभावात् लोभप्रवर्धनाद्वा सौभाग्यनगरे चोरभयं भृशमवर्धत। नक्तमेव किं? प्रकाशपरिपूर्णे दिवापि तत्र तत्र चौर्यं भवति स्म। द्वित्राणां धनिनां सर्वस्वं चोरैरपहृतम्। विभूतिवर्धनोऽपि चोरभयात् भृशमबिभ्यत्। स चिन्ताग्रस्तोऽभवत्।

एकस्मिन् दिने समाचारोऽयं सर्वत्र व्याप्तः यद् यदा प्रत्यहमिव विभूति-वर्धनः कूपसमीपे धनपेटिकां धावति स्म, तदा प्रमादवशात् हस्तात् सा पेटिका गम्भीरे कूपे अपतदिति कृत्वा तस्य गृहे रोदनमनिवारितमस्ति इति। ततः कश्चित् चण्डालः वीथ्यां वीथ्यामघोषयत् यद् यः कृपया प्रभूतजलपरिपूर्णात् तस्मात् कूपात् पेटिकां निस्सारयेत्, तस्मै पारितोषिकतया रूप्यद्वयं प्रदीयते इति।

कूपस्य गभीरत्वाज्जलपरिपूर्णत्याच्च नैकोऽपि धनपेटिकां कूपात् निष्कासयितुं आगतः। अन्ततः मध्याह्नसमये कश्चिदपरिचितः पुरुषः अगत्यावदत् अहं कूपात् पेटिकां निष्कासयितुमिच्छाम्यतः कृपया स कूपो दर्शयितव्य इति। यदा सः अपरिचितःपुरुषः कूपं तमपश्यत् तदा एवमवदत् – "महाभाग! कूपोऽतीव गम्भीर इव जलपूर्ण इव च प्रतीयते। रूप्यकद्वयकृते विपत्पूर्णमेतत्कर्म कर्तुं न पारयेयम्। यदि भवान् पुरस्कारतया नवतिः रूप्यकाणि दास्यति तर्हि अहं यावच्छक्ति परिश्रम्य कूपात्पेटिकां निस्सारयितुं शक्नोमि इति। किन्तु विभूतिवर्धनः प्रथमनिर्दिष्टरूप्यकद्वयात् किञ्चिदप्यधिकं दातुं नाङ्गीकृतवान्। सः अपरिचितः पुरुषः सम्यक् चतुर्दिक्षु अवलोकितवान्।

तस्मिन् दिने अर्धरात्रसमये दशपञ्चदशाः चोरा महतीं निश्रेणिं गृहीत्वा विभूतिवर्धनस्यावरणे प्राविशन् । ततः कूपे निश्रेणिं स्थापयित्वा कतिचन चोराः कूपस्यान्तः निश्रेण्युपरि कतिचन बहिश्च स्थित्वा पानीयं बहिरुत्तोलयितुं प्रारभन्त । यदा जलोत्तोलनाद् दस्यूनां हस्ता अवशा अभवन्, तदा जलबाहुल्यमीषदून्य-भवत । ततः ते चोरा मनसि धैर्यं धृत्वा जलमुत्तोलयितुमारभन्त । कूपस्याधः पेटिका अदृश्यत । यद्यपि सर्वे चोरा मिलित्वा धनपेटिकां बहिर्निष्कासयितुं प्रायतन्त, तथापि सर्वे मङ्क्षीभूय पेटिकां हस्तैः ग्रहीतुं उत्क्षेप्तुं च न अपारयन् । कतिचन दस्यवः गृहात् शृङ्खलाः आनयन् । अथ पेटिकां शृङ्खलाभिर्दृढतया प्रबध्य कतिचन कूपस्यान्तः कतिचन बहिश्च स्थित्वा तां यथाशक्ति कूपाद् बहिः आकर्षन् । कालिकां स्मृत्वा एकघण्टापर्यन्तं यथाशक्ति परिश्रमं अगणयित्वा आकर्षणेन पेटिका बहिरागता । किन्तु चोराणां हस्ता अरुण-वर्णाः सञ्जाताः । किञ्च प्राणत्यागसमये यादृशी दशा भवेत्, तादृश्येव तेषां स्थितिरभवत् । इत्थं दुरवस्थायां प्राप्तायामपि चोरा भृशं प्रसन्ना एव दृश्यन्ते स्म, यतः पेटिकातीव भारवती वर्तते । पेटिकां तां शिरःसु निक्षिप्य चोराः कालिका-मन्दिरमगच्छन् । तत्र दुर्गायाः समक्षे तां पेटिकामवस्थाप्य चोरा इत्थं व्यवदन्त ।

प्रथमः – प्रथमतः गुप्तवेषं धृत्वाहं विभूतिवर्धनस्य गृहरहस्यानि सर्वाणि ज्ञात्वा असूचयम्अतः किञ्चिदधिकं धनं मह्यं दातव्यम् ।

द्वितीयः – अहं दुर्गायै महिषमेकं बलिमर्पयामीति भक्त्या प्रार्थनामकरवम् । अतः प्रसन्नाया भगवत्या दुर्गायाः कृपया पेटिका अस्माभि-र्लब्धा । अतोऽहमधिकभागं प्रापणीयः ।

तृतीयः – कूपात् पेटिकां बहिर्निष्कासयितुमहं कियत्प्रायते वा युष्माभिः सर्वैर्विदितमेवातः ईषदधिकं मह्यं दातव्यम् ।

चतुर्थः – भक्त्या उपवासं कृत्वा सर्वसमर्थायै भगवत्यै कालिकायै एकविंशतिमेषाबलिं समर्पयिष्यावः इत्यहं मम पत्नी च नमस्कार-स्तवादिकं समाचराव यत एवास्माभिः पेटिका लब्धाऽतः न्यायतः धर्मतश्च मम पत्न्यै अपि भागो देयः ।

केचित – शोचनीयमेवास्ति युष्माकं वचः । चत्वारिंशद् मेषा देव्यै दुर्गायै समर्पयिष्यामः इति निश्चितमस्माभिरत एव पेटिका जलपरिपूर्णात् कूपात् बहिस्समागता । नोचेदस्मज्जनकोऽपि पेटिकां बहिर्निष्कासितुं शक्नोति किम् ? अतः धनविभजनविषये अस्मान् प्रति न्यायः क्रियताम् ।

इत्थं धनव्यामोहिता दस्यवः विवदमाना आत्मनः पक्षं येन केनापि प्रकारेण तर्कैः समर्थयन्तः आसन् । यदा मेषबलिसमर्पणवाग्दानमात्रेणैव सन्तुष्टायाः दुर्गायाः कृपया पेटिका प्राप्ता, तदा मानवबलिसमर्पणे सर्वा पेटिका अवश्यमहमेव लभेयेति मनसि निश्चित्य कश्चिच्चोरः आत्मनः तर्कमस्वीकुर्वन्तमेकं चोरं खड्गेन अहन् । मानवं त्वां कालिकायै बलिं समर्पयामि, यतः कृपावती सा सर्वां पेटिकां मह्यमेव प्रापयिष्यतीति अवदत् । ततः किं वक्तव्यम् ? सर्वे दस्यवः परस्परं हन्तुमारभन्त । अन्ततः एक एव बह्वाघातकायः चोरः अवशिष्टः । यावत यथाकथञ्चित पेटिकामुद्घाट्य पश्यति, तावत स चोरः हन्तेति वदन् निश्चेष्टो भूत्वा भूमावपतत् । "पेटिका मास्तु नाम, धनञ्च मास्तु नाम; किन्तु उपरि कालिकायै बलिसमर्पणाय दशमेषान् क्रेतुं ५०० रूप्यकाणि व्ययितुमावश्यकानि भवेयुः । यतोऽहं मूर्खः प्रार्थनासमन्वितवाग्दानावसरे लब्धायां तस्यां पेटिकायां धनमस्ति चेत् तर्हि बलिं समर्पयिष्यामीति सविवरणं नावदम् । किञ्च बलिं न समर्पयिष्यामि तर्हि एतावत्पर्यन्तं या कालिका कृपां दर्शितवती, सा प्रकुप्य मां किं करिष्यति वेति मन्वानः वारंवारं चिन्ताग्रस्तो भवन् स चोरः मेषान् कालिकायै बलिं समार्पयत् ।

यस्य कारणादेव मित्राणि हतानि, यः आत्मनश्च वञ्चितवान् ; तं विभूतिवर्धनमवश्यं सजीवं हन्तुं स चोरो दृढनिश्चयमकरोत् । परेद्युरर्धरात्रिनिशायां यदा खड्गहस्तो दस्युः स विभूतिवर्धनस्य गृहं प्राविशत्, तदा प्रथमतः एव चतुरस्य विभूतिवर्धनस्य गृहे विद्यमाना रक्षकभटाः तमगृह्णन् । ततः चोरात् सर्वं वृत्तं ज्ञात्वा राजाज्ञया स मारितः । यस्य चातुर्येण चोरभयं सर्वथा व्यपगतं, तं विभूतिवर्धनं सर्वे सौभाग्यनगरवासिनः भृशं प्राशंसन् ।

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskrita Bhasha Pracharini Sabha, Chittoor.

## विश्वावसु दक्षिणायन परीक्षाणां फलितांशाः

### RESULTS OF SEPTEMBER EXAMINATIONS 1965.

The following are the Registered Numbers of successful candidates who appeared for the Sanskrit Examinations held on 4th, 5th and 6th September 1965 by the above Sabha.

### परिचयः PARICHAYA

I Class : 2 7 10 11 19 20 21
23 24 25 34 35 38 46 48 49
50 51 61 63 71 72 73 74 75
76 112 113 114 116 120 121 123 124
126 131 133 140 141 144 166 167 168
169 170 192 194 196 197 202 210 211
216 217 255 260 265 266 267 269 271
272 273 274 275 276 283 291 292 293
294 295 296 297 298 300 301 302 306
316 317 318 321 347 349 352 354 355
356 357 372 373 378 397 398 406 407
410 412 413 417 419 421 436 437 438
439 440 441 442 443 444 445 446 453
458 459 460 465 466 469 and 470.

II Class : 3 12 13 14 15 22
26 27 28 30 31 36 39 40 41
45 62 117 125 128 143 149 154 155
171 193 199 201 202 204 205 206 209
214 219 224 225 256 258 259 268 270
277 278 279 280 282 286 299 307 308
311 319 330 331 332 333 334 335 336
337 338 342 343 346 348 353 370 371
374 381 386 405 409 414 418 420 451
452 454 455 467 and 468.

III Class : 29 32 37 65 66 68
70 79 81 83 85 86 88 90 91
94 119 122 130 132 135 145 148 151
152 156 157 158 161 163 172 191 195
200 207 213 218 284 285 310 320 341
350 382 385 394 400 402 416 422 461
and 462.

## अभिज्ञः ABHIGNA

I Class : 57 58 98 100 103 105
108 359 361 363 366 368 369 376 and
377.

II Class : 4 5 6 16 17 55
56 60 102 104 109 111 136 139 173
226 228 234 242 289 303 305 322 323
324 325 240 344 345 358 360 362 364
365 367 423 427 432 448 449 450 and
463.

III Class : 97 99 101 106 107 137
229 232 233 261 287 288 290 304 312
315 375 387 390 391 424 426 430 431
447 and 464.

## विचक्षणः VICHAKSHANA

I Class : Nil.

II Class : 236 237 240 245 and 262.

III Clas : 59 175 176 177 178 179
238 243 246 247 248 263 264 and 438.

## समर्थः SAMARTHA

I Class : Nil.
II Class : 456 and 457.
III Class : Nil.
I Part only : 184 185 187 188 227 434
and 435

II Part only : 379 only.

## कोविदः KOVIDA

I, III & V Parts : 18 only.

V Part : 250 251 and 252

The following are the names of the candidates who stood first in first class of the above examinations.

Prizes will be awarded to them in due course.

PARICHAYA :— No. 349. T. S. Krishnan, Madurai.
ABHIGNA :— No. 98. M. S. Chudamani,
Crompet, Madras.

## उत्तीर्णाः 371

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|---|
| | | | प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खण्डशः |
| **परिचयः** | 320 | 283 | 122 | 83 | 52 | -- |
| **अभिज्ञः** | 103 | 94 | 15 | 42 | 26 | -- |
| **विचक्षणः** | 29 | 26 | -- | 5 | 14 | — |
| **समर्थः** | 13 | 11 | — | — | — | 8 |
| **कोविदः** | 5 | 4 | — | — | — | 4 |
| | 470 | 418 | 137 | 130 | 92 | 12 |

## उपयुक्तानि परीक्षाकेन्द्राणि 43.

(१) अंबतूरु (२) अनन्तपुरम् (३) अनकापल्ली (४) अमरापुरम् (५) आल्लगड्डा (६) इन्द्रप्रस्थम् (नवदेहली) (७) कोयंबत्तूरु (८) कोत्तपेट (९) क्रोंपेट (१०) खम्मम् (११) चित्तूरु (१२) चिदम्बरम् (१३) गुंटूरु (१४) जगय्यपेट (१५) तंजावूरु (१६) त्यागरायनगर् (१७) तांबरम् (१८) तिरुच्चिरापल्ली (१९) तिरुवेंगाडु (२०) तिरुच्चनूर (२१) नेल्लूरु (२२) परमेश्वरमंगलम् (२३) पट्टुकोट्टै (२४) पेदनन्दिपाडु (२५) पेद्दापुरम् (२६) प्रशान्तिनिलयम् (२७) बेंगलूरु (२८) भीमवरम् (२९) मचिलीपट्टणम् (३०) मधुरा (ए) (३१) मधुरा (बि) (३२) मन्त्रालयम् (३३) मन्नार्गुडि (३४) मामिडिकुदूरु (३५) राजानगरम् (३६) राजमहेन्द्रवरम् (ए) (३७) राजमहेन्द्रवरम् (बि) (३८) विजयवाडा (३९) सेंगालिपुरम् (४०) शाहपूर् (४१) श्रीरंगम् (४२) सत्यमङ्गलम् (४३) सेलम् ॥

**के. श्रीनिवासाचार्यः,**
परीक्षामन्त्री.

# श्रीपाञ्चरात्रभगवच्छास्त्रोक्ता नित्यार्चनाविधिः

## रघुनाथभट्टाचार्यचक्रवर्ती

### आन्ध्रप्रदेशागामपण्डितपरिषदः सहायकार्यदर्शी

विदितचरमेवैतत्समेषामपि विद्वत्तल्लजानां यदेकायनमूलवेदानुरोध्यष्टोत्तरशत-संहिताकार-श्रीपाञ्चरात्रभगवच्छास्त्रोक्तनित्यर्चनाविधिः श्रीपाञ्चरात्रभगवच्छास्त्रग्रन्थ-माला-प्रधानकार्यदर्शिभिः श्रीमद्भागवतोपदेवैद्यविद्वानित्युपाधिधारिभिः श्रीपाञ्चरात्रागम-पाटशालाप्रतिष्ठापकैः श्री उ. वे. प्र. श्रीमद्भिर्लक्ष्मीनरसिंहाचार्यवर्यैः प्रकाशित इति ।

पूर्वाचार्यवर्यैरनुगृहीतेऽत्र नित्यार्चनाविधौ प्रथमतोऽर्चनाविधिरिति भगवदर्चन-प्रयोगस्सम्यगुपदर्शितः , तदन्वर्चकमुख्यावसरविषया इति बह्वोर्चकौपयिकश्लोक-विशेषाः प्रतिपादिताः, आवाहनार्थमुपयुज्यमाना बीजमन्त्राः प्रत्येकं निर्दिष्टाः । ततश्च न्यासत्रैविध्यं तत्प्रकारश्च निरूपितः । पश्चादावाहनक्रमस्सुविशदं लक्षितः । सर्वत्र भगवदालयेषु विनियोगमर्हतीति मनसि कृत्वा श्रीविष्णुशतनामावलिरत्र निवेशित इति प्रतिभाति । पुंश्रीभूनीलासूक्तानि नारायणसूक्तैकदेशश्चाहत्य पञ्च-सूक्तानि सस्वरनिर्देशं निवेशितानि । अत्राऽसौ विशेषः यदस्मिन्नपि काले भगवदाराधनौपयिकनिबन्धचिचीषिवो बहव आचार्यवर्या राराजन्त इति, अपि च शास्त्रैकशरणैर्निगदपूर्वैराचार्यसार्वभौमैरेतादृशा निबन्धाः प्रकटीक्रियन्त इति च । अयं नित्यार्चनाविधिकोशस्सर्वस्याप्यर्चकजनस्य प्रथमतः पठनार्ह इत्यस्माकीन-स्सम्प्रत्ययः ।

# श्रीपाञ्चरात्रभगवच्छास्त्रगुरुकुलम्

## राविअनंतवरम्, पेनुमूडिपोस्ट, गुण्टूरु मण्डलं (आ. प्र.)

एतद्गुरुकुलेन पाञ्चरात्रविहितपूजोत्सवादिप्रक्रियासंरक्षणाय आगमशास्त्र-बोधन - ग्रन्थप्रकाशन - परीक्षानिर्वहण - पट्टप्रदानादयः कार्यक्रमाः निर्वाह्यन्ते ।

(१) आगमदीक्षितः (२) आगमाचार्यः (३) आगमभट्टाचार्यः इति तिस्रः परीक्षा निर्वाह्यन्ते ।

तदनुबन्धिन्यां ग्रन्थमालायां अर्चनपूजनोपयोगीनि पुस्तकानि च प्रकाश्यन्ते । तत्रादौ नित्यर्चनाविधिः प्रकाशतां नीतः । विशेषविज्ञानाय गुरुकुलमेव प्रश्नमर्हति ।

# गेयम्

### कल्याणी रागः — आदितालः

#### पल्लवी

सन्त्यजान्वयान्मानं - भज धर्मम्
सन्त्यजान्वयान्मानं - प्रोझितधर्माणाम्
मानने, आशा का, का आशा

#### अनुपल्लवी

निन्दामौदास्यं, क्षेत्रसंवरणे,
अज्ञातिक्रमणं वेति सत्यं वद (सन्त्यज)

#### चरणे

१. धर्मविचरितं - धर्मप्रवर्तकम्
धर्मप्रवचनं - प्रत्ययधूननम्
आत्मनि प्रत्ययं - कर्मणि दिश
भज त्यज वाऽनिन्दां - सनातनं पदम्
निजानन्दे निन्दायां भन्दस्व वा दन्दह (सन्त्यज)

२. वैरनिवारणं मैत्र्युपकरणम्
बह्निप्रशमनं वारिनिदानम्
सेन्धनं चेद्वह्निर्ज्वलतितराम्
आत्मवत्प्रेमाणं - सर्वस्मिन् दिश
धर्मभृतं जरा - कारणकार्यकम्
धर्मसंशयात ध्रुवं - शर्मसमन्वयः (सन्त्यज)

— यल्. उमामहेश्वरशर्मा,

केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि अधः दीयन्ते । अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. कं. ति

## Names of Subscribers for Gairvani 1965

(Continuation)

124. K. Harikrishnan, Auditor, Chittoor. 4 00
125. M. S. Sastry, Ponuru. 5 00

(एतदवधि एतावन्त एवेति विज्ञापयामि)

# विश्वावसूत्तरायणपरीक्षाकार्यक्रमः

## MARCH 1966.

*The programme of the forth-coming examinations of the Samskrita Bhasha Pracharini Sabha. Chittoor is tabled as follows :—*

| सशुल्कं आवेदनपत्राणां स्वीकरणस्य अन्तिमतिथिः<br>Last date to receive applications with fees. | विलम्बशुक्लेन (प्रतिपत्रं ५० पै) सह आवेदनपत्राणां स्वीकरणस्य अन्तिमतिथिः<br>Last date to receive applications with penalty @ 50 Ps. | परीक्षातिथयः<br>Dates of Examinations. |
|---|---|---|
| 20-1-1966 | 31-1-1966 | 5,6,7 MARCH 1966. |

सं. भा. प्र. सभा, चित्तूरु.
S. B. P. Sabha, Chittoor.
15—11—1965.

कीं॰ श्रीनिवासाचार्यः,
परीक्षामन्त्री – Parikshamanthry.

N. R. 8145/60. Postal R. No. H. 493.

वार्षिकम् रु. ४-००

# प्रहेलिकाः

लम्बोदर ! तव चरणौ आदरतो यो न पूजयति ।
स भवति विश्वामित्रो दुर्वासो गौतमश्चेति ॥

[विश्वामित्रः = विश्वस्यामित्रम्, दुर्वासाः = दुष्टवसनः, गौतमः = पशुतमः]

कुलालस्य गृहेस्त्यर्धं तदर्धं हस्तिनापुरे ।
तद्युग्मं चास्ति लङ्कायां यो जानाति स पंडितः ॥

[ कुम्भः, कर्णः, कुम्भकर्णः ]

सदारिमध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव नित्यम् ।
यथोक्तवादिन्यपि नैव दूतिका का नाम कान्तेति निवेदयाशु ॥

["रि"मध्या = मध्यस्थरिवर्णा, कान्ता = अन्तस्था का वर्णा च, सारिका ]

देवराजो मया दृष्टः वारिवारणमस्तके ।
खादन्नर्कं च सोमं च विषं पीत्वा लयं गतः ॥

[हे देवर ! वारिवारणमस्तके = तीरे, अजो दृष्टः । अर्कः अर्कपर्णः वृक्षविशेषः । सोमः तन्नाम्नी लता । विषं जलम् । आलयमिति छेदः ।

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate & Secretary, S B. P. Sabha, Chittoor. (A. P.)
Printed by Sri T. K. Thiruvengadacharya, at Vijaya Press, Chittoor (A. P) C. 1000